## याज्ञवल्कीये ३०५ श्लोकः ।

**दर्शने** सभ्यादीनामिति शेषः । दुर्दृष्टानित्यत्र 'मतिबुद्धीति' (व्या. सू. ३।२।१८८) वर्तमाने क्त इत्याशयेन तदर्थमाह । **स्मृत्येत्याद्याशंक्यमानानित्यन्तेन** । रागेत्याद्युभयान्वयि । ५० 'पुनर्दृष्टेति' व्याचष्टे । **पुनरिति** । पश्चादित्यर्थः । स्वयं राजा विवादविषयभूततद्धनादिति नार्थः । प्रागुक्तयुक्तेरत आह । **विवादेति** । अस्य रागाल्लोभाद्भयाद्वाऽपीत्यनेन प्रागुक्तेन पौनरुक्त्यं परिहरति । **अप्राप्तजेतृदंडेति** । पूर्वव्यवहारे जितस्तस्य सदोषत्वं यदि विचार्यमाणेऽस्ति तदा दुष्टत्वेन स जयी दण्ड्य इत्यनेन जेतृदंडो विधीयते । वचनांतरेणाप्राप्तत्वादितरांशे तु तेन प्राप्तत्वादनुवाद इति न पुनरुक्तिस्तत्र हि सभ्यमात्रग्रहणं न जयिनोऽपीति भावः । १०

विशेषान्तरमाह । **यदा पुनरिति । दोषेण** दोषेणैव । विशेषान्तरमाह । **यदा त्विति ।** उक्तप्रतिज्ञायां मानमाह । **पादो गच्छतीति ।** कर्त्रादीनां सर्वेषामपि पापप्राप्तिप्रतिपादनेतद्वचनबलात् सर्वेऽपि दुष्टत्वेन दंड्या इत्यर्थः । नन्वेकस्यैव पापस्य कर्त्रादीनां पादरूपांशतः प्राप्तेरितिलाभेन दंडोऽप्येतेषामेक एव स्यान्न पृथक् पृथक् इत्यत आह । **एतच्चेति ।** उक्तवचनं चेत्यर्थः । अस्य वचनस्य दोषप्रतिपादने तात्पर्यं न त्वंशतो दोषप्रापणे इत्यर्थः । उक्तेऽर्थे न्यायस्य १५ **जैमिनीय**मानत्वं सूचयन् हेतुमाह । **कर्तृसमेति ।** इतःप्राक् यथोक्तमित्यपपाठः । 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादिति' **जैमिनीय**न्यायेन यः कर्ता तस्मिन्नेव फलं संमतमिति लभ्यते । तत्र फलं द्विविधं ऐहिकं पारलौकिकं च । तत्र प्रकृते ऐहिकं धर्मशास्त्रोक्तदंडादि पारलौकिकं नरकादि । एवं स्थिते "रागाल्लोभादि"त्युपक्रम्य "सभ्याः पृथक् पृथक् दंड्याः" इति प्रतिपुरुषमैहिकदंडरूपसंपूर्णफलसंबंधविधानादपूर्वस्य च यत्र कर्तरि स्वयमुत्पन्नं तत्रैव २० फलोत्पादकत्वस्वभावकत्वात् प्रत्येकं समग्रफलसंबंधविध्यनुपपत्त्या प्रत्येकं समग्रदुरितापूर्वसंबंध इति भावः ॥ ३०५ ॥

## याज्ञवल्कीये ३०६ श्लोकः ।

**वर्तयितुः ।** वादिप्रतिवाद्यन्यतरस्य उद्धृत्यादिना इति भावः । **अपि**र्व्युत्क्रमे इत्याह । **पराजितो ।** लिङर्थो विवक्षित इत्याह । **मन्यत इति ।** आयांतमित्यस्य व्याख्या **कूटेति ।** २५ **आदिना** तथासाक्ष्यादिपरिग्रहः । **पुनः** पश्चात् । एवमग्रेऽपि । **धर्मेति ।** तन्निर्णयस्थानमित्यर्थः । "अधिशीङिति" (व्या. सू. १।४।४६) कर्म । स्वं तेनाधर्मे कृतेऽपि स्वयंधर्मो न कार्यो दोषादित्याह । **धर्मेणोति** । विरोधं परिहर्तुं सविशेष**नारद**संमतिमाह । **नारदेति** । तीरितमित्यस्य व्याख्या **साक्षीति । आदिना** भुक्त्यादिपरिग्रहः । **अन्विति** अगृहीतदंडमित्यर्थः । अनुशिष्टमित्यस्य व्याख्या **उद्धृतेति** । गृहीतदंडमित्यर्थः । तथा निर्णयपूर्वकमिति भावः । तदाह । **दण्डेति ।** ३० विधर्मत इत्यत्र तृतीयांतात्तसिः । अधर्महेतुकं मन्यते इत्यर्थः । तामिति शेषः । **आस्थाय** दापयित्वा । **पुनः** पश्चात् । **उद्धरेत्** निश्चिनुयात् ।

ननु **नारद**तो निर्णीतस्यापि व्यवहारस्य तथा सति दंडावष्टंभपुरःसरं पुनः करणं प्रतीयते, **मानवे** तु तद्वैपरीत्यमिति मिथो विरोध इत्याह । **यत् पुनरिति ।** यत्र क्वचन धर्माधिकरणे यद्व्यवहारपदं धर्मतस्तीरितं "पारतीरः कर्मसमाप्तौ" तथा निश्चितं असौ न पुनः प्रवर्तते इति । यच्च न

केवलं वा सत्यत्वेनोक्तं किन्त्वनुशब्दोत्तरं शिष्टं च स दंडं च कृतं तत् प्राज्ञो राजा कृतमेव विद्यान्न पुनर्निवर्तयेदित्यर्थः। परिहरति मानवमित्यर्थः। अग्रेऽस्यान्वयः।

तत्रादौ **नारद**तात्पर्यमाह। **अर्थीति**। वर्तत्वं निष्पन्नत्वं अत एव तत्र विधर्मत इत्युक्तम्। **पुनः** पश्चात्। **मनु**तात्पर्यमाह। **न पुनरिति**। नास्तीत्यर्थः। अत एव तत्र धर्मत इत्युक्तम्। ५ धर्मतो व्यवहारो निर्णीत इति निश्चयेन पुनस्तथेति **मनु**तात्पर्यम्, धर्मतो निर्णीतं न वेति संदेहे तु पुनस्तथेति **नारद**तात्पर्यं, तथा च **नारदीयं** संशयविषयं **मानवं** निश्चितविषयमिति भावः।

विशेषमाह। **यत्पुनरिति**। **न्यायापेतं** तद्रहितम्। न्यायापेतत्वे हेतुरज्ञानकृतमिति पुनः करणे हेतुमाह। **अन्यायविहितमिति**। अन्यायविहिते तदपीत्यर्थः॥ ३०६॥

## याज्ञवल्कीये ३०७ श्लोकः।

१० **गृहीतेति**। अन्यायेन गृहीतस्य दंडरूपस्य धनस्येत्यर्थः। क्वचिद्दण्डस्येत्येव पाठः। अन्यायेनेति छेद इत्याह। **अन्यायेनेति**। तत्र निमित्तमाह। **लोभेति**। वरुणाय निवेद्येत्यस्यार्थमाह। **वरुणायेद-मिति**। न ममेति शेषः। **स्वयं** स्वयमेव। दोषख्यापनार्थमिदम्। न्यूनतां परिहरति। **यस्माच्चेति**। **चः** समुच्चये व्युत्क्रमे च। विपक्षे बाधकमाह। **इतरथेति**। तददाने इत्यर्थः। ननु दंडस्वामित्वं राज्ञ एवेति क्रमापहारदोषोऽत आह। **अन्यायेति**। सतिसप्तमी। एवं च परस्वग्रहणं १५ तथेति बोध्यम्। यत्तु **मनु**नोक्तम्। ( अ. ९ श्लो. २४४।२४५ )

" अप्सु प्रवेश्य तं दंडं वरुणायोपपादयेत्। श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत्॥

" ईशो दंडस्य वरुणो राज्ञां दंडधरो हि सः। ईशः सर्वस्य जगतो ब्राह्मणो वेदपारगः॥ " इति। तत् पातकविषयं न्यायगृहीतविषयं च। अत एव—( **मनु**. अ. ९ श्लो. २४३ )

" नाददीत नृपः साधुर्महापातकिनो धनम्। आददानस्तु तल्लोभात्तेन दोषेण लिप्यते॥ " इति

२० पूर्वमव्यवहितम्॥

" यत्र वर्जयते राजा पापकृद्भ्यो धनागमम्। तत्र कालेन जायंते मानवा दीर्घजीविनः॥

" निष्पद्यंते च सस्यानि यथोक्तानि विशां पृथक्। बालाश्च न प्रमीयंते विकृतं न च जायते॥ "

( **मनुः** अ. ९ श्लो. २४६।२४७ )।

इत्यग्रे च तथोक्तम्। प्रवेश्य प्राक्षिप्य वरुणायेदमिति प्राग्वत्। ईश इति पूर्वस्य प्रतिपत्ति- २५ विधेरर्थवादोऽयम् एवमग्रीयावपि। जायंते इति वर्तमानवचनमविवक्षितम्। विकृतं करणादि-हीनत्वमित्यर्थः। इति शिवं०॥

इति श्रीमन्मिताक्षराव्याख्याने महादेवभट्टात्मजोमाङ्कवैजनाथार्द्धांग-
भूतलालाकृष्णजननि पायगुंडोपाख्य श्रीलक्ष्मीदेवी-
विरचिते लक्ष्माभिधे व्यवहारप्रकरणं
३० समाप्तम्।

---

॥ श्रीरस्तु॥

# एतत्पुस्तकोद्धृतऋषिवचनानां सूची ।

# एतत्पुस्तकोद्धृतऋषिवचनानां सूची।

## एतत्पुस्तकोद्धृतन्यायानां सूची । ( २ )

## व्याकरणसूत्राणां सूची । ( ४ )